धूमसिहा-धूमशिखा-स्त्री० । धूमाग्रभागे, " चत्तारि धूमसिहाओ पण्णत्ताओ । तं जहा-वामा णाममेगा वामावत्ता,वामा णाममेगा दाहिणावत्ता,दाहिणा णाममेगा वामावत्ता, दाहिणा णाममेगा दाहिणावत्ता" । स्था० ४ ठा० २ उ० । नीहारार्थे, दे० ना० ५ वर्ग ६१ गाथा ।

धूमा-धूमा-स्त्री० । धूमिकायाम्, स्था० १० ठा० ।

धूमिश्रा-देशी-नीहारार्थे, दे० ना० ५ वर्ग ६१ गाथा ।

धूमिय-धूमित-त्रि० । धूमयुते, " अप्पत्तियधूमधूमितं चरणं । " पिं० ।

धूमिया-धूमिका-स्त्री० । मिहिकाभेदे,धूमिका मिहिकाभेदः, वर्णतो धूमिका धूमाऽऽकारा, धूम्रेत्यर्थः । स्था० १० ठा० । धूमिकामिहिकयोर्वर्णकृतो भेदः । धूमिका धूम्रवर्णा, धूसरेत्यर्थः । मिहिका स्वापाण्डुरेति । भ० ३ श० ७ उ० । दे० ना० । " धूमिया य मिहिया य ।" को ३८ गाथा । धूमिका रूक्षा प्रविरला धूमाभा प्रतिपत्तव्या । अनु० । जी० । स्था० । तदात्मके आन्तरिक्षेऽस्वाध्यायभेदे, स्था० १० ठा० ।

धूय-धूत-न० । 'धुय' शब्दार्थे, स्था० ६ ठा० ।

धूयकिलेस-धूतक्लेश-त्रि० । 'धुयकिलेस' शब्दार्थे, आतु० ।

धूयचारि( ण् )-धूतचारिन्-पुं० । 'धुयचारि ( ण् )' शब्दार्थे, आचा० १ श्रु० ५ अ० ३ उ० ।

धूयज्झयण-धूताध्ययन-न० । 'धुयज्झयण' शब्दार्थे, आचा० १ श्रु० ८ अ० ४ उ० ।

धूयपाव-धूतपाप-त्रि० । 'धुयपाव' शब्दार्थे, आतु० ।

धूयबहुल-धूतबहुल-त्रि० । 'धुयबहुल' शब्दार्थे, सूत्र० २ श्रु० २ उ० ।

धूयमोह-धूतमोह-त्रि० । 'धुयमोह' शब्दार्थे, सूत्र० १ श्रु० ४ अ० २ उ० । दशा० ।

धूयरय-धूतरजस्-त्रि० । 'धुयरय' शब्दार्थे, सूत्र० १ श्रु० ४ अ० २ उ० ।

धूयरागमग्ग-धूतरागमार्ग-पुं० । 'धुयरागमग्ग' शब्दार्थे,सूत्र० १ श्रु० ४ अ० २ उ० ।

धूयवाय-धूतवाद-पुं० । 'धुयवाय' शब्दार्थे, आचा० १ श्रु० ६ अ० १ उ० ।

धूया-दुहितृ-स्त्री० । दोग्धि च केवलं जननीं स्तन्यार्थमिति दुहिता । तत्र " दुहितरि धो हिलोपश्च ।" इति वचनादेर्धत्वे हिलोपे च " ऋदुत्सु पुष्पोत्सवोत्सुकदुहितृषु ।" इति वचनात् ऊत इत्वे च "धूया ।"(५७) उत्त० १ अ० । " दुहितृभगिन्योर्धूया-बहिण्यौ " ॥ ८ ॥ २ ॥ १२६ ॥ इति प्राकृतसूत्रेण दुहितृशब्दस्य वा धूयाऽऽदेशः।'धूया । दुहिआ ।' प्रा० २ पाद । सुतायाम्, वाच० । अं० । उत्त० । " ताणं धूयाणं । " आचा० १ श्रु० ५ अ० ५ उ० । नि० चू० । आ० म० ।

धूरिअ-न० । देशी-दीर्घे, दे० ना० ५ वर्ग ६२ गाथा ।

धूलडिअ आ-धूलिका-स्त्री० । " धूलि-क:।"अ-डड-डुल्लाः स्वार्थिककलुक् च " ॥ ८ । ४ । ४२६ ॥ इति सूत्रेणापभ्रंशे स्वार्थे धूलिशब्दाद् डडप्रत्ययः । डिति परे इकारलोपे " धूलड " इति । " योगजश्चैषाम् " ॥ ८ । ४ । ४३० ॥ इति सूत्रेणापभ्रंशे अ-डड-डुल्लानां योगे डडप्रत्ययान्ताद् अप्रत्ययः । प्रा०४ पाद । " आन्तान्ताड् डाः " ॥ ८ । ४ । ४३१ ॥ इति प्राकृतसूत्रेणापभ्रंशे स्त्रियां वर्तमानादप्रत्ययान्तप्रत्ययान्तात् डाप्रत्ययः । 'धूलडिआ ' इत्यवस्थायाम् " अस्येदे " ॥ ८ । ४ । ४३२ ॥ इति प्राकृतसूत्रेणापभ्रंशे स्त्रियां वर्तमानस्य नाम्नो योऽकारस्तस्याकारे प्रत्यये परे इकारः । प्रा० ४ पाद । धूल्याम्, वाच० ।

धूलि-धूलि-स्त्री० । धू-लि-कः,वा ङीप् । रजसि, परागे च । जी० ३ प्रति० ४ अधि० ।

धूलिजंघ-धूलिजङ्घ-त्रि० । धूल्या धूसरे जङ्घे यस्य स धूलिजङ्घः । शाकपार्थिवाऽऽदिदर्शनान्मध्यमपदलोपी समासः । पादलग्नधूलिके, व्य० १० उ० । नि० चू० ।

धूलिणाय-धूलिज्ञात-न० । चिक्किणखज्ञाते, तीर्थकराऽऽचार्यगणधरशिष्याणां समीपे स्वाध्यायमधिकृत्य " इति उक्तिय धूलिणायमाहंसु ।" यथा धूलिरेकत्र स्थापिता, तत उद्धृत्यान्यत्र यत्राऽऽस्तीर्यते तत्रावश्यं किञ्चित्परिशटति,ततोऽप्यन्यत्र प्रस्तीर्यमाणा भूयो भूयः परिशटति, यथा वा प्रासादे लिप्यमाने मनुष्यपरम्परया चिक्किणखः प्रत्यर्प्यमाणो बहु परिशटितः स्तोकमात्रमशेष एव सर्वान्तिममनुष्यस्य हस्तं प्राप्नोति । बृ० १ उ० ३ प्रक० ।

धूलिधूसर-धूलिधूसर-त्रि० । श्लक्ष्णधूलिके, " धूलिधूसरसर्वाङ्गौ । " आ० क० । आचा० ।

धूलिबहुल-धूलिबहुल-त्रि० । प्रचुरपांशुके, प्र० ७ श० ६ उ० ।

धूलिवरिस-धूलिवर्ष-पुं० । पांशुवृष्टौ, " धूलीवरिसं वरिसइ ।" आ० म० १ अ० २ खण्ड ।

धूली-धूली-स्त्री० । 'धूलि ' शब्दार्थे, जी० ३ प्रति०४ उ० ।

धूलीघट्ट-देशी-अश्वे, दे० ना० ५ वर्ग ६१ गाथा ।

धूव-धूप-पुं० । " पो वः " ॥ ८ । १ । २३१ ॥ स्वरात्परस्याऽसंयुक्तस्यानादेः पस्य प्रायो दन्तोष्ठस्थानीयो वकारः । 'धूवो ।' प्रा० १ पाद । धूपयति रोगान् दोषान् वा । धूप अच् । गुग्गुलप्रभृतिगन्धद्रव्योत्थे धूमे, तत्साधनद्रव्ये च । वाच० । " कप्पूरमलयचंदणकालागुरुपवरकुंदुरुक्कतुरुक्कधूवडज्झंतसुरभिमघमघंतगंधुद्धुयाभिरामे ।" धूपश्च दशाङ्गाऽऽदिगन्धद्रव्यसंयोगजः । जं० १ वक्ष० । एतेषां सम्बन्धी यो धूपस्तस्य दह्यमानस्य सुरभियों मघमघायमानोऽतिशयवान् गन्ध उद्धृत उद्भूतः,तेनाभिराममभिरमणीयं यत्तत्तथा । ज्ञा० १ श्रु० १ अ० । नि० चू० । आ० म० । प्रज्ञा० । प्रश्न० । जं० । अनु० ।

धूवघडी-धूपघटी-स्त्री० । "पो वः "॥८।१।२३१॥ इति पस्य वकारः।प्रा०१पाद।धूपभृतघटिकायाम्,"ताओ णं धूवघडीओ कालागुरुपवरकुंदुरुक्कतुरुक्कधूवमघमघंतगंधुद्धुआभिरामाओ सुगंधवरगंधिआओ गंधवट्टिभूआओ उरालेणं मणुण्णेणं घाणमणणिव्वुइकरेणं गंधेणं ते पएसे सव्वओ समंता आपूरेमाणीओ सिरीए अईव उवसोभेमाणा चिट्ठंति ।" जं० १ वक्ष० । जी० ।

धूवण-धूपन-पुं० । धूप-ल्युः । यक्षधूपे, वाच० । धूपप्रदाने, न० । " अण्णयरेण धूवणजाएण धूवेज्ज वा । " आचा० २

श्रु० २ चू०१३ अ० । धूपनमित्यात्मवस्त्राऽऽदेः,नखामाघारितम् । ज्ञा० १ श्रु० १७ अ० । नो शरीरस्य स्वीयवस्त्राणां वा धूपनं कुर्यात् । सूत्र० २ श्रु० १ अ० ।

धूवणजाय-धूपनजात-न० । धूपनप्रकारे, आचा० २ श्रु० २ चू० १३ अ० ।

धूवणविहि-धूपनविधि-पुं० । धूपदानप्रकारे, "धूवणविहिपरिमाणं करेइ णण्णत्थ अगुरुतुरुक्कधूवमाइएहिं ।" उपा० १ अ० । ( विशेषस्तु 'आणंद' शब्दे द्वितीयभागे १०८ पृष्ठे द्रष्टव्यः )

धूवधूम-धूपधूम-पुं० । अगुर्वादिगन्धद्रव्योत्थे धूमे, दर्श०१ तत्त्व ।

धूवपूया-धूपपूजा-स्त्री० । धूपप्रदानरूपे पूजाभेदे, दर्श०१ तत्त्व ।

धूविय-धूपित-त्रि० । धूप-क्त-वा आयाभावः । अध्वादिगमनेन श्रान्ते, सन्तापिते च । वाच० । अगुर्वादिसुगन्धिद्रव्यैः सुगन्धीकृते च । "दुग्गंधं सि काउं अगुरुमाईहिं सुगंधीकयं ।" ग० १ अधि० । दुर्गन्धाऽऽपनयनार्थं धूपाऽऽदिना धूपित इति । आचा० २ श्रु० १ चू० २ अ० १ उ० ।

धूसर-धूसर-पुं० । गर्दभे, उष्ट्रे, कपोते, तैलाऽऽकारे ईषत्पाण्डुवर्णे, कृष्णश्वेतवर्णे, शुक्लपीतवर्णे च । तद्वर्णवति, त्रि० । वाच० । "धूलिधूसरसर्वाङ्गः ।" आ० क० । आचा० ।

धूसरिअ-धूसरित-त्रि० । "गुंठिअं उद्धूलिअं च धूसरिअं ।" को० १९२ गाथा ।

धे-ध्यै-धा० । चिन्तने, भ्वा०-पर०-सक०-अनिट् । ध्यायति । अध्यासीत् । वाच० । भ० १ श० १ उ० ।

ध्रै-धा० । तृप्तौ, भ्वा०-पर०-अक०-अनिट् । ध्रायति । अध्रासीत् । वाच० ।

धेज्ज-धेय-त्रि० । धारणीये, पालनीये, ज्ञा०१ श्रु० १ अ० ।

ध्येय-त्रि० । हृदि धारणीये, ज्ञा० १ श्रु० १ अ० । विपा० ।

धेणु-धेनु-स्त्री० । धयति सुतान् धे-नु-इच्च । नवप्रसूतायां गवि, वाच० । बृ० १ उ० ३ प्रक० । प्रा० । आचा० ।

धेवय-धैवत-पुं० । अतिसंधयते अनुसंधयति शेषस्वरानिति निरुक्तिवशाद् धैवतः । "अनुसंधयते यस्मा-देनान् पूर्वोत्थितान् स्वरान् । तस्मादस्य स्वरस्यापि, धैवतत्वं विधीयते ॥१॥" इत्युक्तार्थके रैवतापरनामधेये, स्था०७ ठा० । अनु० । नाभ्या नाभेरधोभागं, वस्ति प्राप्योर्ध्वगः पुनः । धावन्निव च यो याति, कण्ठदेशं स धैवतः ॥ १ ॥ " इत्युक्तलक्षणे कण्ठोक्ते स्वरभेदे, वाच० । "धेवयस्सरसंपन्ना, भवंति कलहप्पिया ।" स्था० ७ ठा० ।

धोज्ज-धुर्य-त्रि० । धौरेये, "धोज्जेहिं जुंति उवणीया ।" धुर्यैर्धौरेयैः । व्य० १ उ० ।

धोय-धौत-त्रि० । धाव-क्त-ऊठ् । अतिनिर्मलीकृते, जी० ३ प्रति० ४ उ० । आ०म० । ज्ञा० । जलाऽऽदिना प्रक्षालिते, भ० ६ श० ३ उ० । प्रत्यूनजलक्षालनक्रियया धौतं मलिनं सत् प्रक्षालितम् । बृ०१ उ०२ प्रक० । औ० । "कहं देहो धोइउ सक्को ।" धोतुं क्षालयितुं शक्यम् । तं० । अतिनिशितीकृते,रा० । प्रज्ञा० । धौतं 'धोकलं' क्रमिति । बृ० ३ उ० । शोधिते, ज्ञा० १ श्रु० १ अ० । रा० । जी० । शुद्धे च । रजते, न० । वाच० ।

धोयरत्त-धौतरक्त-त्रि० । पूर्वं धौते पश्चाद्रक्ते वस्त्राऽऽदौ, "णो धोयरत्ताइं वत्थाइं धारएज्जा ।" पूर्वं धौतानि पश्चाद्रक्तानि । आचा० १ श्रु० ८ अ० ४ उ० ।

धोवण-धावन-न० । 'धावण' शब्दार्थे, प्रव० १ द्वार ।

ध्रुव-ध्रुव-ध्रुवकार्यां वाचि,"भ्रु (भ्रू) णो धु(ध्रु)वो वा" ॥८।४।३९१॥ अपभ्रंशे भ्रु (भ्रू) णो धातोर्ध्रु (ध्रु) व आदेशो वा भवति । "ध्रुवइ घिहासिउ किं पि" पक्षे-"इत्तउं ब्रोप्पिणु सउणि ठिउ,पुणु दूसासणु ब्रोप्पि । तो हउं जाणउं एहो हरि, जइ महु अग्गइ ब्रोप्पि ॥१॥" दुर्योधनो क्रियम-शकुनिर्नाम मातुल इयद् भूत्वा स्थितः पुनर्दुःशासनो भूत्वा स्थितः । अहं ततस्तर्हि जाने यदि एष हरिर्ममाग्रे भूत्वा तिष्ठति शेष इत्यर्थः । पक्षे-भूत्वा । प्र० । "एप्प्येप्पिण्वेव्येविणवः" ॥८।४।४४०॥ क्त्वास्थाने एप्पिणु । "स्वराणां स्वराः प्रायोऽपभ्रंशे" ॥८।४।३२९॥ इति एकारेण सहभ्रूकारस्य उकारः । ब्रोप्पिणु । ध्रुप्पिणु । क्त्वा प्र० । "एप्पेप्पिणु०" ॥८।४।४४०॥ इति क्त्वास्थाने । एप्पि । शेषं पूर्ववत् । ब्रोप्पि । प्रा०ढुं० ४ पाद । यथाऽत्र भरते मेरुदिशि ध्रुवो वर्त्तते, तथा महाविदेहेष्वैरवते वर्तते न वा ?। तथा-जम्बूद्वीपे कति ध्रुवाः सन्ती ?, इति प्रश्ने, उत्तरम्-भरतवदैरवतादि ध्रुवाः संभाव्यन्ते, परमेतत्प्रतिपादकान्यक्षराणि तु न दृष्टानि स्मरन्तीति । २२९ प्र० । सेन० ३ उल्ला० ।

ध्रुवु-ध्रुवम्-न० । "यत्रं-परं-समं-ध्रुवं-मा-मनाक् एम्ब-पर-समाणु-ध्रुवु-मं-मणाउं" ॥ ८ । ४ । ४१८ ॥ इति प्राकृतसूत्रेण ध्रुवमो ध्रुवुः । नित्यमित्यर्थे, प्रा० ४ पाद । "चंचलु जीविउ ध्रुवु मरणु, पिअ रूसिज्जइ काइं । होसइँ दिअहा रूसणा दिव्वइँ वरिससयाइं ॥ १ ॥" जीवितं चञ्चलं, मरणं ध्रुवं, हे प्रिये ! रुष्यते कथं ?, रोषयुक्त दिवसा अपि दिव्यानि वर्षशतानि भविष्यन्तीत्यर्थः । प्रा० ४ पाद ।

इति श्रीमत्सौधर्मबृहत्तपागच्छीय-कलिकालसर्वज्ञकल्प-श्रीमद्भट्टारक-जैनश्वेताम्बराऽऽचार्य-श्री १००८ श्रीविजयराजेन्द्रसूरीश्वरविरचिते 'अभिधानराजेन्द्रे' धकाराऽऽदिशब्दसङ्कलनं समाप्तम् ।

# नकार

न–न–पुं० । न इति तवर्गस्य पञ्चमो वर्णः स्पर्शसंज्ञो नासिकाद-न्तस्थानीयः । "नो नरे च सनाथेऽपि, नोऽनाथेऽपि प्रदृश्यते ।(७१) एका० । "नशब्दस्त्रिषु लिङ्गेषु, पठ्यते भिन्नसूचमयोः ॥५३॥" एका० । "नः पुंसि वहौ हेरम्बे (४२)" "नकारस्तु स्त्रियां नाज्ञो (४३) ।" नशब्दस्त्रिषु लिङ्गेषु, पठ्यते भिन्नसूचमयोः ॥४३॥" एका० ४० ।

न–अव्य० । निषेधे, "वाऽऽदौ" ॥८।१।२२९॥ असंयुक्तस्याऽऽदौ वर्त्तमानस्य नस्य णो वा भवति । णत्वपक्षे–ण । प्रा० १ पाद । "नात्पुनर्यादाइ वा" ॥ ८ । १ । ६५ ॥ नञः परे पुनः शब्दे आदेरस्य आ आइ इत्यादेशौ वा भवतः । 'न उणा, न उणाइ ।' पक्षे 'न उण, न उणो' प्रा० १ पाद ।

नअ–नग–पुं० । "क-ग-च-ज-त-द-प-य-वां प्रायो लुक्" ॥ ८ । १ । १७७ ॥ इति गलुक् । पर्वते, प्रा० १ पाद ।

नअण–नयन–न० । "क-ग-च-ज-त-द-प-य-वां प्रायो लुक्" ॥ ८ । १ । १७७ ॥ इति यलुक् । प्रा० १ पाद । चक्षुषि, प्रा० १ पाद ।

नअर–नगर–न० । 'क-ग-च०' ॥८ । १ । १७७॥ इत्यादिना गलुक् । "अवर्णो यश्रुतिः" ॥ ८ । १ । १८० ॥ इति अकारो यश्रुतिकः । क्वचित्-नयरं । पुरे, प्रा० १ पाद ।

नई–नदी–स्त्री० । सरिति, सूत्र० १ श्रु० १ अ० ५ उ० । "वाऽऽदौ" ॥ ८ । १ । २२९ ॥ असंयुक्तस्याऽऽदौ वर्त्तमानस्य नस्य णो वा भवति । 'नई ।' पक्षे-णई । प्रा० १ पाद । भ० । प्रश्न० । "सरिया तरंगिणी निवगा–या नई आवया सिंधू ।" को० २८ गाथा । ( अत्र विशेषवक्तव्यता 'णई' शब्देऽस्मिन्नेव भागे १७३८ पृष्ठे गता )

नउ–नउ–अव्य० । "इवार्थे नं-नउ-नाइ-नावइ-जणि-जणवः" ॥८ । ४ । ४४४॥ इति इवार्थे नउ इत्यादेशः । "रविअत्थमणि समाउलेण कण्ठिउ विइण्णु न छिण्णु । चक्कें खण्डु मुणालिअहे, नउ जीवग्गलु दिण्णु ॥१॥" सूर्यास्तमने समाकुलेन चक्रवाकेन कण्ठे विसीर्णं दत्तं स्थापितं सत् मृणालिकायाः कमलिन्याः खण्डं न छिन्नं न भक्षितं, 'नउ' उत्प्रेक्ष्यते, जीवस्य निर्गच्छतोऽर्गला दत्ता ॥ प्रा० ४ पाद ।

नं–नं–अव्य० । "इवार्थे नं-नउ-नाइ-नावइ-जणि-जणवः" ॥८।४। ४४४॥ इति इवार्थे नं इत्यादेशः । "मुख-कबरी बन्ध तहे, सोह धरहिं, नं मल्ल-जुज्झु ससि-राहु करहिं । तहे सोहहिं कुरल भमरउलतुलिअ, नं तिमिरडिम्भ खेल्लंति मिलिअ ।" तस्या मुख-कबरीबन्धौ वदनवेणीबन्धौ शोभां धरतः 'नं' उत्प्रेक्ष्यते–शशिराहू मल्लयुद्धं कुरुतः । तस्याः कुरलाः केशाः शोभन्ते । किंभूताः ? भ्रमरकुलतुलिता मधुकरयूथसमानाः, 'नं' उत्प्रेक्ष्यते–तिमिर-डिम्भा अन्धकारबालका मिलिता क्रीडन्तीत्यर्थः । प्रा० ४ पाद । "नं प्रश्नाणि तथाऽनन्ते, सानन्दं नं च नन्दने ॥ ७६ ॥" एका० । "नमाक्यहान्ययोर्भवत् ।" ( ५३ ) एका० ।

नंदण–नन्दन–न० । देववने, "नंदणं अमरुज्जाणं ।" को० ६७ गाथा । ( अस्य बहवोऽर्थाः 'णंदण' शब्देऽस्मिन्नेव भागे १७४९ पृष्ठे दर्शिताः )

नंदणा–नन्दना–स्त्री० । तनयायाम्, "अंगया नंदणा सुआ, तणया ।" को० १०२ गाथा ।

नंदी–नन्दी–स्त्री० । हर्षे, ज्ञानपञ्चके, ज्ञाने, आ० म० १ अ० १ खण्ड । "नंदी मंगलहेउं ।" बृ० १ उ० । गवि, "नंदी तंबा बहुला, गिट्ठी गोला य रोहिणी सुरही ।" को० ४५ गाथा । ( नन्द्याः परिपूर्णतया व्याख्या 'णंदि' शब्देऽस्मिन्नेव भागे १७५१ पृष्ठे प्रतिपादिता )

नकर–नगर–न० । नगा वृक्षाः पर्वता वा सन्त्यस्मिन्निति नगरम् । पुरभेदे, "चूलिकापैशाचिके तृतीयतुर्ययोराद्यद्वितीयौ" ॥८ । ४ । ३२५॥ इति गस्य कः । 'नगरं । नकरं ।' प्रा० ४ पाद ।

नक्कसिरा–नासिकाशिरा–स्त्री० । घ्राणशिरायाम्, "घुंघुणओ नक्कसिरा ।" को० ११४ गाथा ।

नक्ख–नख–पुं० । करुहे, "सेवाऽऽदौ वा" ॥ ८ । २ । ९९ ॥ इति खद्वित्वम् । प्रा० २ पाद । जी० । औ० । दे० ना० । "नक्खा नहा करुहा ।" को० १०६ गाथा ।

नक्खत्त–नक्षत्र–न० । ज्योतिष्कभेदे, कृ० प० । स्था० । जं० । "रिक्खं उडु नक्खत्तं ।" को० ६६ गाथा । सू० प्र० । चं० प्र० । ( विस्तरतो व्याख्या 'णक्खत्त' शब्देऽस्मिन्नेव भागे १७६० पृष्ठे गता )

नग्गोह–न्यग्रोध–पुं० । वटे, प्रज्ञा० १ पद । नि० चू० । "नग्गोहं वडरुक्खं ।" को० २५७ गाथा ।

नट्ट–नाट्य–न० । नृत्ये, ज्ञा० १ श्रु० १ अ० । बृ० । जं० । रा० । "नट्टं लासं तंडवं ।" को० १६६ गाथा । ( अस्य द्वात्रिंशद्भेदाः 'णट्ट' शब्देऽस्मिन्नेव भागे १७९७ पृष्ठे दर्शिताः )

नड–नट–पुं० । नाटकानां नाटयितरि, ज्ञा० १ श्रु० १ अ० । "नडो कुसीलओ ।" को० २७२ गाथा । ( अस्य भेदौ 'णड' शब्देऽस्मिन्नेव भागे १८०४ पृष्ठे दर्शितौ )

नडिअ–नटित–न० । विडम्बिते, ज्ञा० १ श्रु० ९ अ० । "खूरिअं डलंभिअं नडिअं ।" को० १९६ गाथा ।

नत्तंचर–नक्तञ्चर–पुं० । नक्ते नक्तं वा चरतीति नक्तञ्चरः । राक्षसे, चौरे, बिडाले च । "क-ग-च-ज-त-द-प-य-वां प्रायो लुक्" ॥ ८ । १ । १७७ ॥ इति कलुक् । "नत्तंचरो" प्रा०१पाद ।

नत्थून–नंष्ट्वा–अव्य० । नश्-क्त्वा । "तून-त्थूनौ ष्ट्वः" ॥ ८ । ४ । ३१३ ॥ इति ष्ट्वा इत्यस्य स्थाने त्थूनादेशः । अदृश्यीभूयेत्यर्थे, प्रा० ४ पाद ।

नम्म–नर्मन्–न० । हास्ये, "केली नम्मं च परिहासो ।" को० १६६ गाथा । "स्नमदामशिरोऽनभः" ॥ ८ । १ । ३२ ॥ इति प्राकृते वा पुंस्त्वम् । "नम्मो ।" परिहासे, केलौ च । प्रा० ४ पाद ।

नम्मया–नर्मदा–स्त्री० । विन्ध्याद्रिनिर्गतायां प्रसिद्धनद्याम्, " मेअलकन्ना य नम्मया रेवा । " को० १३० गाथा । आव० ।

नम्रता–स्त्री० । औचित्ये, नमनशीलतायाम्, द्वा० १२ द्वा० ।

नयण–नयन–न० । प्रापणे, आ० म० १ अ० १ खण्ड । निवेशने, पं० सं० ५ द्वार । नेत्रे, " अच्छि नयणं च लोअणं नित्तं । " को० १११ गाथा ।

नयणजल–नयनजल–न० । नेत्रजले, "बप्फं बाहो अ नयणजलं ।" को० ११२ गाथा ।

नयणा–स्त्री०–नयन–न० । "वाऽञ्जल्याद्यर्थवचनाऽऽद्याः" ॥ ८ । १ । ३३ ॥ इति नयनशब्दस्य प्राकृते स्त्रीत्वमपि ।'नयणा-नयणाइं।' प्रा० १ पाद ।

नर–नर–पुं० । पुरुषे, प्रा० १ पाद । आचा० । प्रा० म० । " मणुआ नरा मणुस्सा, मच्चा तह माणवा पुरिसा । " को० ६० गाथा । ( नराणां भेदाः ' नर ' शब्देऽस्मिन्नेव भागे ११०३ पृष्ठे उक्ताः )

नरणाह–नरनाथ–पुं० । राजनि, " नरनाहो पत्थिवो निवो राया । " को० १०० गाथा ।

नल–नर–" रसोर्लशौ " ॥ ८ । ४ । २८८ ॥ इति मागध्यां रस्य लः । नले, प्रा० ४ पाद ।

नल्लय–नल्लक–न० । कमलतन्तौ, " नलयं लामंजयं उसीरं च । " को० १४६ गाथा ।

नलिण–नलिन–न० । कमले, " अंबुरुहं सयवत्तं, सरोरुहं पुंडरीअमरविंदं । राईवं तामरसं, महुप्पलं पंकयं नलिणं ॥१०॥" को० १० गाथा । ( अस्य बहवोऽर्थाः ' णलिण ' शब्देऽस्मिन्नेव भागे १७४८ पृष्ठे दर्शिताः )

नलिणी–नलिनी–स्त्री० । कमलिन्याम, " भिसिणी नलिणी कमलिणी य । " को० १४७ गाथा । पद्मिन्याम, द्वा० १ श्रु० १ अ० ।

नवरंग–नवरङ्ग–त्रि० । " रत्तयं च नवरंगं । " को० २६१ गाथा ।

नवरि–अव्य० । शीघ्रे, " नवराइं नवरि य झु-त्ति अत्ति लहु-सत्ति इक्कसरिअं च । अविहाविअं-मिक्कपए,अतक्किअं तक्खणं सहसा ॥ १७ ॥ " को० १७ गाथा ।

नवसिअ–नमस्यित–त्रि० । नमस्कारकर्तरि, " ओवाइअं नवसिअं । " को० १२६ गाथा ।

नह–नख–पुं० । पाणिपादजे, प्रव० ४० द्वार । " नक्खा नहा करजहा । " को० १०६ गाथा ।

नभस्–न० । आकाशे, एकार्थिकानि–" खं अब्भं अंतरिक्खं, वोमं नह-मंबरं गयणं । " को० २७ गाथा ।

नाअ–नाक–पुं० । स्वर्गे, " तिविडपं तह सुरालओ नाओ । " को० ६५ गाथा ।

नात–त्रि० । अवबुद्धे, प्रा० ४ पाद ।

नाइ–नाइ–अव्य० । " इवार्थे नं-नउ-नाइ-नावइ-जणि-जणवः " ॥ ८ । ४ । ४४४ ॥ इति इवार्थे 'नाइ' आदेशः । "वलयावलिनिवडणभय-ण धण उद्धब्भुअ जाइ । वल्लहविरहमहादहह, थाह गवसेइ नाइ ॥१॥" नायिका वलयावलिनिपतनभयेन ऊर्ध्वभुजा याति । "नाइ" उत्प्रेक्ष्यते–वल्लभविरहमहाह्रदस्य स्ताघं गवेषयतीत्यर्थः । प्रा० ४ पाद ।

नाम–नामन्–न० । सम्यग्बोधाय कृते पदार्थानां संज्ञायाम्, " सन्ना गुत्तं च नाम अभिहाणं । " को० १६१ गाथा । ( नाम्नो भेदा ' णाम ' शब्देऽस्मिन्नेव भागे १८७७ पृष्ठे दर्शिताः )

नारी–नारी–स्त्री० नरस्त्रियाम्, बृ० ४ उ० । " पुरिसाणं नो अन्नो परिसो अरी अत्थि त्ति नारी उ । " तं० । ( व्याख्या ' णारी ' शब्देऽस्मिन्नेव भागे २०११ पृष्ठे गता )

एकार्थिकानि–

" रामा रमणी सीमं-तिणी वहू वामलोअणा विलया ।
महिला जुवई अबला, नियंबिणी अंगणा नारी ॥ १२ ॥ "

तद्भेदेऽप्येकार्थिकानि–

" सच्छंदा उद्दामा, निरग्गला मुक्कला विसंखलया ।
निरवग्गहा य सइरा, निरंकुसा हुंति अप्पवसा ॥ १३ ॥ "
को० १२-१३-गाथा ।

नारुट्ठ–नारुट्ठ–पुं० । कुलारे, को० १३२ गाथा । दे० ना० ।

नालिअ–मूढ–त्रि० । " शीघ्राऽऽदीनां वहिल्लाऽऽदयः " ॥ ८ । ४ । ४२२ ॥ इत्यन्तर्गतसूत्रेण मूढस्य नालिआऽऽदेशः । मूर्खे,बाले, जडे, प्रा० । "जो पुणु मगणि जि खसफसिहूअउ, चिंतइ देइ न दम्मु न रूअउ । रइ-वस-भमिरु करग्गुल्लालिउ,घरहिं जि कोंतु गुणइ सो नालिउ ॥ १ ॥ " यः पुनर्मनस्येव ( खसफसिहूअउ ) व्याकुलीभूतः सन् चिन्तयति–द्रम्मं न ददाति न रूपकम्, स मूढो रतिवशेन भ्रमणशीलः सन् कराग्रोल्लालितं कुन्तं गृहे एव गुणयति, चालयतीत्यर्थः । प्रा० ४ पाद ।

नालिआ–नालिका–स्त्री० । समयनियामके यन्त्रविशेषे, " नालिया घडिआ । " को० २७२ गाथा । ज्यो० । अनु० । ( नालिका क्रियमाणेत्यादि सर्वा वक्तव्यता ' णालिया ' शब्देऽस्मिन्नेव भागे २०१४ पृष्ठे गता )

नालिका–स्त्री० । ताम्राऽऽदिमयघटिकायाम, अनु० ।

नावइ–नावइ–अव्य० । इवार्थे, " इवार्थे नं-नउ-नाइ-नावइ-जणि-जणवः" ॥ ८ । ४ । ४४४ ॥ इति इवार्थे नावइ आदेशः । "पेक्खेविणु मुहु जिणवरहो, दीहरनयण सलोणु । नावइ गुरुमच्छरभरिउ,जलणि पवीसइ लोणु ॥१॥" 'नावइ' उत्प्रेक्ष्यते, गुरुमत्सरभृतं लवणं ज्वलने प्रविशति, किं कृत्वा ?, जिनवरस्य दीर्घनयनं सलवणं सलावण्यं मुखं प्रेक्ष्येत्यर्थः । प्रा० ४ पाद ।

नास–नाश–पुं० । अभावे, द्रव्या० ६ अध्या० । (अस्य भेदप्रतिपादनं ' णास ' शब्देऽस्मिन्नेव भागे २०१५ पृष्ठे गतम् )
" पणासो निहणं नासो । " को० १६७ गाथा ।

नासि–नश–धा० । विप्र-विघाते, "स्वराणां स्वराः" ॥ ८ । ४ । २३८ ॥ इति ह्रस्वाकारस्थाने दीर्घोऽऽकारः । प्रा० ४ पाद ।

नासइ–नश्यति–धा० । " नशेर्विउड-नासव-हारव-विप्पगाल-पलावाः " ॥ ८ । ४ । ३१ ॥ इति नशेर्णयन्तस्य नासाऽऽदेशः । 'नासइ।'नाशयति । प्रा० ४ पाद ।

नासा–नासा–स्त्री० । घ्राणग्रहणेन्द्रिये, " नासा घाणं घोणा । " को० १११ गाथा ।

**निअंब–नितम्ब–पुं०** । कटिपश्चाद् भागे, कटके च । वाच० । " रमणंतियं निअंबो । " को० ११५ गाथा ।

**निअंबिणी–नितम्बिनी–स्त्री०** । स्त्रियाम्, को० १२ गाथा । ( अस्यैकार्थिकानि ' नारी ' शब्दे गतानि )

**निअंसण–निवसन–न०** । परिधाने, औ० । ओघ० । उत्त० । कटीवस्त्रे, " जाव खिवयं कडिल्लं, निअंसणं साडुली च परिहणयं । " को० ९६ गाथा ।

**निअकल–निजकल–त्रि०** । गोलाऽऽकारे, "पेडाल-निअकल-वट्टुलाइं परिमंडलत्थम्मि । " को० ७४ गाथा । दे० ना० ।

**निअगुणसलाहा–निजगुणश्लाघा–स्त्री०** । स्वगुणप्रशंसायाम्, " विगत्थणं निअगुणसलाहा ।" को० २४७ गाथा ।

**निअत्त–निवृत्त–त्रि०** । " निवृत्तवृन्दारके वा " ॥ ८।१।१३२ ॥ इति अत उत्वा । 'निवुत्तं । निअत्तं ।' विरते, प्रा० १ पाद ।

**निअय–नियत–त्रि०** । नियमिते, "निच्चं निअयं सासयं ।" को० १६० गाथा । सूत्र० । वृ० । ( ' निच्च ' शब्देऽस्य बहून्येकार्थिकानि ( १५३ ) गाथायैर्न प्रतिपादितानि )

निजक–त्रि० । स्वकीये, " अप्पुल्लयं निअयं । " को० २३१ गाथा । आव० ।

**निअर–निकर–पुं०** । समुदाये, को० १८-१९-गाथा । ( अस्यैकार्थिकानि ' निउरंब ' शब्दे वक्ष्यते )

**निअलिअ–निगडित–त्रि०** । बद्धे, " बद्धं संदाणिअं निअलिअं च ।" को० १६७ गाथा ।

**निआण–निदान–न०** । आदिकारणे, को० १३६ गाथा । (अत्र विशेषः ' णियाण ' शब्देऽस्मिन्नेव भागे २०६४ पृष्ठे गतः )

**निउंचिअ–निकुञ्चित–त्रि०** । संकुचिते, " संकोडिअं निउंचिअं । " को० १८६ गाथा ।

**निउण–निपुण–त्रि०** । कुशले, " चउरा निउणा कुसला, छेया विउसा बुहा य पत्तट्ठा ।" को० ६० गाथा । ( अस्य शब्दस्य बहवोऽर्थाः ' णिउण ' शब्देऽस्मिन्नेव भागे २०१७ पृष्ठे दर्शिताः)

निगुण–त्रि० । नियतगुणे, विशे० ।

**निउरंब–निकुरम्ब–पुं०** । समूहे, एकार्थिकानि–" उप्पंको उप्पीलो, छक्करो पहयरो गणो पयरो । ओहो नियहो संघो, संघाओ संहरो निअरो ॥ १८ ॥ संदोहो निउरंबो, भरो निहाओ ।" को० १८-१९-गाथा । औ० । रा० । जी० ।

**निक्किव–निष्कृप–त्रि०** । निर्दये, " निद्धंधसा निसंसा, निक्कुप्पा निक्किवा अकरुणा य ।" को० ७३ गाथा । पं० व० । (अस्य लक्षणं ' णिक्किव ' शब्देऽस्मिन्नेव भागे २०२२ पृष्ठे द्रष्टव्यम् )

**निक्खय–निक्षत–त्रि०** । ' णिक्खय ' शब्दार्थे, को० २४० गाथा । दे० ना० ।

**निक्खित्त–निक्षिप्त–त्रि०** । " णिक्खित्त ' शब्दार्थे, " निमिअं निहिअं च निक्खित्तं ।" को० ११३ गाथा ।

**निग्गहट्ठाण–निग्रहस्थान–न०** । वादकाले वादी प्रतिवादी येन निगृह्यते तन्निग्रहस्थानम् । सूत्र० १ श्रु० १२ अ० । वादिप्रज्ञापकस्य प्रतिज्ञाहान्यादौ, स्या० १ श्लो० । विप्रतिपत्तिः, अप्रतिपत्तिश्च निग्रहस्थानम् । तत्र विप्रतिपत्तिः साधनाभासे साधनबुद्धिर्दूषणाभासे च दूषणबुद्धिरिति । अप्रतिपत्तिः साधनस्यादूषणं, दूषणस्य चानुद्धरणम् । तच्च-निग्रहस्थानं द्वाविंशतिविधम् । तद्यथा-प्रतिज्ञाहानिः १, प्रतिज्ञाऽन्तरम् २, प्रतिज्ञाविरोधः ३, प्रतिज्ञासंन्यासः ४, हेत्वन्तरम् ५, अर्थान्तरम् ६, निरर्थकम् ७, अविज्ञातार्थकम् ८, अपार्थकम् ९, अप्राप्तकालम् १०, न्यूनम् ११, अधिकम् १२, पुनरुक्तम् १३, अननुभाषणम् १४, अज्ञानम् १५, अप्रतिभा १६, विक्षेपः १७, मतानुज्ञा १८, पर्यनुयोज्योपेक्षणम् १९, निरनुयोज्यानुयोगः २०, अपसिद्धान्तः २१, हेत्वाभासाश्च २२ । तत्र १-हेतावनैकान्तिकीकृते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्युपगच्छतः प्रतिज्ञाहानिर्नाम निग्रहस्थानम् । यथा-अनित्यः शब्द ऐन्द्रियकत्वाद् घटवदिति प्रतिज्ञासाधनाय वादी वदन् परेण सामान्यमैन्द्रियकत्वमपि नित्यं दृष्टमिति हेतावनैकान्तिकीकृते यद्येवं ब्रूयात्-सामान्यवद् घटोऽपि नित्यो भवत्विति । स एवं ब्रुवाणः शब्दाऽनित्यत्वप्रतिज्ञां जह्यात् १। २-प्रतिज्ञातार्थप्रतिषेधे परेण कृते तत्रैव धर्मिणि धर्मान्तरं साधनीयमभिदधतः प्रतिज्ञान्तरं नाम निग्रहस्थानं भवति । अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते तथैव सामान्येन व्यभिचारे चोदिते यदि ब्रूयादुक्तं सामान्यमैन्द्रियकं नित्यम्, तद्धि सर्वगतम्, असर्वगतस्तु शब्द इति । तदिदं शब्दे अनित्यत्वलक्षणपूर्वप्रतिज्ञातः प्रतिज्ञाऽन्तरमसर्वगतः शब्द इति निग्रहस्थानम् । अनया दिशा शेषाण्यपि विंशतिरूपाणि २ । स्या० । ( ३- प्रतिज्ञाविरोधविवेचनम्-' पइण्णाविरोह ' शब्दे ) । ( ४- प्रतिज्ञासंन्यासविवरणम्- ' पइण्णासंणास ' शब्दे पञ्चमभागे दर्शयिष्यते ) । ( ५- हेत्वन्तरव्याख्या- ' हेउअंतर ' शब्दे द्रष्टव्या ) । ६- " प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ७ " । गौ० सू० । यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात्-नित्यः शब्दोऽस्पर्शत्वादिति हेतुः । हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदं, पदं च नामाऽऽख्यातोपसर्गनिपाताः । अभिधेयस्य क्रियाऽन्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम, क्रियाकारकसमुदायः कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातं, धात्वर्थमात्रं च कालाभिधानविशिष्टं,योगेष्वर्थादभिद्यमानरूपा निपाताः, उपसृज्यमानाः क्रियावद्द्योतका उपसर्गा इत्येवमादि, तदर्थान्तरं वेदितव्यमिति । भा० । ( अस्य ' अत्थंतर ' शब्देऽपि, प्रथमभागे ५०७ पृष्ठे किञ्चिद्वक्तव्यमस्ति ) ( ७-निरर्थकविवेचनम्-' निरत्थय ' शब्देऽग्रे २७३५ पृष्ठे वक्ष्यते ) ( ८-" परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ९ ।" गौ० सू० । यद्वाक्यं परिषदा, प्रतिवादिना च त्रिरभिहितमपि न विज्ञायते श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातमविज्ञातार्थमसामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानम् । भा० । ( सूत्रस्याऽस्य वृत्तिर्ग्रन्थतोऽवसेया) । ( ९-"पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् १० ।" गौ० सू० । यत्रानेकस्य पदस्य, वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्तीत्यसम्बद्धार्थकत्वं गृह्यते, तत्समुदायोऽर्थस्यापायादपार्थकम् । यथा-दश दाडिमानि, षडपूपाः, कुण्डमजाजिनं पललपिण्डः, अथ रौरुकमेतत् कुमार्याः पाय्यं, तस्याः पिता अप्रतिशीन इति । भा० । (ग्रन्थाद्वेद्या वृत्तिर्विलोक्या)

१०-"अवयवविपर्यासवचनमप्राप्तकालम् ११"। गौ०सू०। प्रतिज्ञाऽऽदीनामवयवानां यथालक्षणमर्थवशात् क्रमः, तत्रावयवविपर्यासेन वचनमप्राप्तकालसम्बन्धार्थकालं निग्रहस्थानमिति। भा०। अप्राप्तकालं लक्षयति अवयवस्य कथैकदेशस्य विपर्यासो वैपरीत्यम्। तथा च समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाऽभिधानं पर्यवसन्नम्, तथाऽयं क्रमः-वादिना साधनमुक्त्वा सामान्यतो हेत्वाभास उद्धरणीय इत्येकः पादः। प्रतिवादिनश्च सभापाद्यन्तो द्वितीयः पादः। प्रतिवादिनः स्वपक्षसाधनं, तत्र हेत्वाभासोद्धरणीयश्चेति तृतीयः पादः। जयपराजयव्यवस्था चतुर्थः पादः। एवं प्रतिज्ञाहेत्वादीनां क्रमः। तत्र सभाक्षोभभयामोहाऽऽदिना व्यत्यस्ताभिधानमप्राप्तकालमिति वृत्तिः ॥ ११ ॥ (न्यूनव्याख्या-'नून' शब्देऽनुपदमेव २७७७ पृष्ठे करिष्यते) (१२-अधिकव्याख्या 'अहिय' शब्दे प्रथमभागे ८८७ पृष्ठे गता) (१३-पुनरुक्तविषयः 'पुणरुत्त' शब्दे द्रष्टव्यः)। १४-"विज्ञातस्य परिषदा त्रिरभिहितस्याप्यनुच्चारणमननुभाषणम् १७"। गौ० सू०। विज्ञातस्य वाक्यार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमिति, अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयात्। भा०। अननुभाषणं लक्षयति-परिषदा विज्ञातस्य विशिष्य बुद्धार्थस्य वादिना त्रिरभिहितस्य तथा च प्रथमवचनेऽननुभाषणे वादिना वारत्रयं वाक्यमिति दर्शितम्, तथा च त्रिरभिधानेऽपि यत्रानुभाषणविरोधी व्यापारः, तत्राननुभाषणं निग्रहस्थानमित्यर्थः। (अवस्थाऽवशिष्टा वृत्तिस्तु ग्रन्थतोऽवसेया) १५-"अविज्ञातं चाऽज्ञानम् १८"। गौ०सू०। विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदविज्ञानं तदज्ञानं निग्रहस्थानमिति। अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति। (पुनरस्य वक्तव्यं 'अन्नाण' शब्दे प्रथमभागे ४८७ पृष्ठेऽप्याहितम्)। १६-"उत्तरस्याप्रतिपत्तिरप्रतिभा १६"। गौ०सू०। परपक्षप्रतिषेधः उत्तरं तद् यदा न प्रतिपद्यते तदा निगृहीतो भवति। भा०। अप्रतिभां लक्षयति-उत्तरार्हेऽपि परोक्तं बुद्ध्वाऽपि यत्रोत्तरसमये उत्तरं न प्रतिपद्यते तत्राप्रतिभा निग्रहस्थानम्। न चात्राननुभाषणस्याऽऽवश्यकत्वात् तदेव दूषणमस्त्विति वाच्यम्। परोक्ताऽनुवादे हि तत् यत्र परोक्तमनूद्यापि नोत्तरं प्रतिपद्यते तत्रास्याद्भूर्यात् स्वसूचनश्लोकपाठाऽऽद्युन्नेया चेयमिति वृत्तिः। १७। (१७-विक्षेपो 'विक्खेव' शब्दे)। (१८-मतानुज्ञा-'मयाणुण्णा' शब्दे)। (१९-पर्यनुयोज्योपेक्षणं-'पज्जणुजुज्जुवेक्खण' शब्दे)। (२०-निरनुयोज्यानुयोगः 'निरणुजुज्जाणुओग' शब्देऽत्र वक्ष्यते) २१-"सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः २४।" गौ० सू०। कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययादनियमात् कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः यथा न सदात्मानं जहाति, न सतो विनाशः, नासदात्मानं लभते, नासदुत्पद्यत इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति। एकप्रकृतीदं व्यक्तं विकाराणामन्वयदर्शनात् मृदन्वितानां शरावाऽऽदीनां दृष्टमेकप्रकृतिकत्वम्। तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते, तस्मात् समन्वयदर्शनात् सुखाऽऽदिभिरेकप्रकृतीदं शरीरमिति एवमुक्तवाननुयुज्यते-अथ प्रकृतिविकार इति कथं लक्षितव्यमिति ?। यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः, यच्च धर्मान्तरं प्रवर्तते स विकार इति। सोऽयं प्रतिज्ञातार्थविपर्यासादनियमात् कथां प्रसञ्जयति प्रतिज्ञातं खल्वनेन नासदाविर्भवति सत् तिरोभवतीति। सदसतोश्च तिरोभावाऽऽविर्भावमन्तरेण न कस्यचित्प्रवृत्तिः प्रवृत्त्युपरमश्च भवति, मृदि खल्ववस्थितायां भविष्यति शरावाऽऽदिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति अभूदिति च प्रवृत्त्युपरमः तदेतन्मृद्धर्माणामपि न स्यात्। एवं प्रत्यवस्थितो यदि सतश्चाऽऽत्महानमसतश्चाऽऽत्मलाभमभ्युपैति, तदस्यापसिद्धान्तो निग्रहस्थानं भवति। अथ नाभ्युपैति पक्षोऽस्य न सिध्यति। भा०। (वृत्तिर्ग्रन्थादेवावसेयेति) (२२-हेत्वाभासा 'हेउआभास' शब्दे द्रष्टव्याः) गौ० सू० वा० भा० वि० वृ०।

निग्गिच्छ-निर्गीर्ण-त्रि०। निर्गीर्णे, "णीहरिअं णिग्गिच्छं।" को० १६७ गाथा।

निग्घासिअ-निक्षिप्त-त्रि०। निक्षिप्ते, "खित्तं णिग्घासिअं च आडइअं।" को० १८६ गाथा।

निच्च-नित्य-त्रि०। 'णिच्च' शब्दार्थे, "सइ अणिरय अविरामं, अणुवेलं संतयं तया णिच्चं।" को० ८७ गाथा।

निच्चुड्ड-निच्चुड्ड-त्रि०। 'निक्किव' शब्दार्थे, को० ७३ गाथा।

निच्छूढ-उद्वृत्त-त्रि०। "केलाच्छूढाऽऽदयः" ॥८। ४। २५८॥ इति उद्वृत्तस्थाने निच्छूढाऽऽदेशः। 'निच्छूढं। उद्वृत्तम्'। उद्धृते, प्रा० ४ पाद।

निज्झर-निर्झर-न०। उदकप्रस्रवणे, भ० ५ श० ७ उ०। "ओझरं निज्झरं।" को० २१६ गाथा। क्षि-धातोस्तु 'णिज्झर' एव। स च णकाराऽऽदिसंक्रमणे गतः। "क्षेर्णिज्झरो वा" ॥८। ४। २०॥ इति णकाराऽऽक्रान्त एव। प्रा० ४ पाद।

निज्झाय-दृश-धा०। प्रेक्षणे, "दृशो निअच्छ-पेच्छावयच्छावयज्झ-वज्ज-सव्वव-देक्खौ अक्खावक्खावअक्ख-पुलोए-पुलय-निआवआस-पासाः ॥८। ४। १८१॥" इति दृशेः 'निज्झाय' आदेशः। 'निज्झाअइ।' पश्यति। प्रा० ४ पाद।

निद्दुहअ-क्षरित-त्रि०। क्षरिते, "निद्दुहअं क्षरिअं च्छिप्पिअं च नीसंदिअं च पज्झरिअं।" को० ८० गाथा।

निट्ठुर-निष्ठुर-त्रि०। 'णिट्ठुर' शब्दार्थे, "कढिणा य कक्कसा निट्ठु-रा खरा थद्धुरा फरुसा।" को० ७४ गाथा।

निडाल-निटाल-न०। "कपाले, भालं अलिअं णिडालं।" को० ११२ गाथा। केचिदव्युत्पन्नमपि वदन्ति। ललाटशब्दस्य तु "ललाटे च" ॥८। १। २५७॥ इति सूत्रेण ललाटस्य लकाराऽऽदेर्णत्वाऽऽदेशः। "णिडालं"। प्रा० १ पाद।

निड्ड-नीड-न०। "नीडं निड्डं कुलायं च।" को० १२६ गाथा। पक्षिणां निलये, वाच०।

निम्मया-निम्नगा-स्त्री०। नदीनामिति नदाम, को० २८ गाथा। प्रज्ञा०। ('नई' शब्देऽनुपदमेव विशेषो गतः)

नित्त-नेत्र-न०। नयने, स्था० १० ठा०। "अच्छी नयणं च लोअणं नित्तं।" को० १११ गाथा।

निरत्थाम-निःस्थामन्-त्रि०। बलहीने, "अथामो निरत्थामो।" को० १७० गाथा।

निराहिअ-निर्दारित-त्रि०। मर्दिते, "उम्मुयं मद्दिअं च निदलिअं।" को० २०१ गाथा।

निद्देस-निर्देश-पुं०। आज्ञायाम, "आएसो सासणं च निद्देसो।" को० १७३ गाथा। (अत्र बहु वक्तव्यं 'निद्देस' शब्देऽस्मिन्नेव

**निसंस–नृशंस**–त्रि० " शषोः सः " ॥ ८ । १ । २६० ॥ इति शस्य सः । 'निसंसो ।' मायागारेने, प्रा० १ पाद । क्रूरे, को० ७१ गाथा । ( अस्य पर्यायाः ' णिसिंस ' शब्दे गताः )

**निसा–निशा**–स्त्री० । रात्रौ, हरिद्रायाम्, सू० ५ उ० । वाच० । निशाशब्दपर्यायाः–" रयणी विहावरी स–व्वरी निसा जामिणी राई । " को० ४७ गाथा ।

**निसाअर–निशाचर**–पुं० । राक्षसे, " इः सदादौ वा " ॥ ८ । १ । ७२ ॥ इति इत्वपक्षे–'निसिअरो ।' प्रा० १ पाद । वाच० । " अवर्णो यश्रुतिः " ॥ ८ । १ । १८० ॥ इति यश्रुतौ 'निसायरो ।' अस्य प्राग्निकत्वपक्षे–'निसाअरो ।' प्रा० १ पाद ।

**निसामिअ–निशामित**–त्रि० । आर्णिते, को० १८४ गाथा ।

**निसामिअय–निशामितक**–त्रि० । आकर्णिते, "निसुअं आयण्णि-अं निसामिअयं । " को०१८४ गाथा । दे० ना० ।

**निसायंत–निशातान्त**–न० । तीक्ष्णधाराविशिष्टे, " अच्छायंतं निसायंतं । " को० २३० गाथा ।

**निसाय–निशात**–त्रि० । तीक्ष्णीकृते, "तिक्खाविअं निसाअं ।" को० २०० गाथा ।

**निसायर–निशाकर**–पुं० । चन्द्रे, "इंदू निसायरो सम–हरो विहू गहवई रयणिनाहो । मयलंछणो हिमयरो, रोहिणिरमणो ससी चंदो ॥ ४ ॥ " को० ५ गाथा । राक्षसे, वाच० । " कगचज– " ॥ ८ । १ । १७७ ॥ इत्यादिना कलोपे " अवर्णो यश्रुतिः " ॥ ८ । १ । १८० ॥ इति यश्रुतिः । 'निसायरो ।' प्रा० १ पाद ।

**निसीह–निशीथ**–पुं० । " निशीथपृथिव्योर्वा " ॥ ८ । १ ।२१६॥ इति थस्य ढो वा । 'निसीढो निसीहो ।' अर्द्धरात्रे, रात्रिमात्रे च । प्रा० १ पाद ।

**निसुअ–निश्रुत**–त्रि० । आकर्णिते, " निसुअं आयण्णिअं निसामिअयं । " को० १८४ गाथा । दे० ना० ।

**निसुदिअ–नत**–त्रि० । भारनम्रे, " निसुदिअं भरक्कंतभरोणयं । " को० १३४ गाथा ।

**निसुद्ध–निशुद्ध**–त्रि० । क्षुब्धे, " खोअक्कं पाडिअं निसुद्धं च । " को० १९४ गाथा ।

**निसेह–निषेध**–पुं० । " निषेधेर्हक्कः " ॥ ८ । ४ । १३४ ॥ इति निषेधेर्हक्कादेशो वा । 'हक्कइ,निसेहइ ।' प्रतिषेधे,प्रा०४ पाद ।

**निस्स–निःस्व**–त्रि० । निर्धने, " रोरो अकिंचणो दुत्थिओ द-रिद्दो य दुग्गओ निस्सो । " को० ३५ गाथा ।

**निस्सेणि–निःश्रेणि**–स्त्री० । अधिरोहण्याम्, " अधिरोहणिआ य निस्सेणी । " को० १२० गाथा ।

**निह–निभ**–नं० । छले, " छलं अवयरो निहं च मिसं । " को० १४२गाथा । सदृशे, आ०म० १ अ० । मायिनि, सूत्र०१ श्रु०६ अ० । क्रोधाऽऽदिभिः पीडिते, सूत्र० १ श्रु० २ अ० १ उ० । आघातस्थाने, सूत्र० १ श्रु० ५ अ० २ उ० ।

**स्निह**–त्रि० । रागवति, आचा० १ श्रु०४ अ० ३ उ० । रागद्वेषयुक्ते, आचा० १ श्रु० ५ अ० ३ उ० । ममत्वसहिते, सूत्र० १ श्रु० २ अ० २ उ० ।

**निहण–निधन**–न० । प्राणत्यागे, " पक्कयो निहणं नासो ।" को० १६७ गाथा ।

**निहय–निहत**–त्रि० । मारिते, उत्त० १२ अ० । भावरिपुभिरिन्द्रियकषायकर्मभिर्हन्यमाने, आचा० १ श्रु०४ अ० ३ उ० । " निहयं निवयं । " को० २४० गाथा ।

**निहस–निकष**–पुं० । " निकष–स्फटिक–चिकुरे हः " । ८।१। १८६ ॥ इति कस्य हः । प्रा० १ पाद । " शषोः सः " । ८ । १ । २६० ॥ इति षस्य सः । प्रा० १ पाद । कषपट्टिकायाम्, प्रज्ञा० १७ पद २ उ० । " निहसो कसो । " को० २६३ गाथा ।

**निहाअ–निघात**–समूहे, को० १६ गाथा । दे० ना० । ( अस्य पर्यायाः ' निउरंब ' शब्दे गताः )

**निहालिअ–निभालित**–त्रि० । दृष्टे, " सच्चविअ–दिट्ठ–पुलइअ–निअच्छिआइं निहालिअ–ऽत्थम्मि । " को० ७८ गाथा ।

**निहिअ–निहित**–त्रि० । स्थापिते, "निमिअं निहिअं च निक्खित्तं । " को०१९३ गाथा । नि–धा–क्तः । " सेवाऽऽदौ वा " ॥ ८ । २ । ९९ ॥ इति तद्वित्वं वा । निहित्तं । पक्षे–तो लोपः । प्रा० २ पाद । निक्षिप्ते, पञ्चा० १० विव० ।

**निहिनाह–निधिनाथ**–पुं० । कुबेरे, " वेसमणो निहिनाहो, अक्खाहिवई कुबेरो य । " को० २४ गाथा ।

**निहुअ–निभृत**–त्रि० । " उदृत्वादौ " । ८ । १ । १३१ ॥ ऋतु-इत्यादिषु शब्देषु आदेर्ऋत उत्वम् । प्रा० १ पाद । नद्धर्मानुगुणे, सूत्र० १ श्रु० ८ अ० । निर्व्यापारे, बृ० ३ उ० । निश्चले, उत्त० ११ अ० । असंभ्रान्ते, कार्याक्षम्य उचितधर्मे, दश० ६ अ० । " मसिणं सणिअं मंदं, मंदं अलसं जडं मराल च । स्वस्थं निहुअं सहरं, वीसत्थ मंथर घिमिअं ॥१५॥" को०१५ गाथा ।

**निहेलण–निलय**–पुं० । " गोणाऽऽदयः " ॥ ८ । २ । १७४ ॥ इति निलयस्थाने 'निहेलण' आदेशः । गृहे, प्रा० २ पाद । " भवणं घर–मावासो, निलयो वसही निहेलणमगारं । " को० ४१ गाथा ।

**नीअ–नीत**–त्रि० । गते, " हिअं नीअं । " को० २६७ गाथा ।

**नीच**–त्रि० । अत्यन्तावनतकन्धरे, उत्त० १ अ० । उच्चविपरीते, स्था० ३ ठा० ४ उ० । अपूज्ये, भ० ३ श० १ उ० । निम्ने, नि० चू० १ उ० । नीचैः स्थाने, माला ऽऽदौ, उत्त० १ अ० । "अहमा इयरा य पावया नीआ । " को० १०३ गाथा ।

**नित्य**–त्रि० । सदाऽवस्थायिनि, स्था० १० ठा० ।

**नीचअ–नीचैस्**–अव्य० । नीचे, "अव्ययैनीचैसि अअः" ॥८। १। १५४ ॥ इति ऐतो अअ इत्यादेशः । 'नीचअं ।' अत्यल्पं, क्षुद्रे च । प्रा० १ पाद ।

**नीड–नीड**–न० । कुलाये, " निडं नीडं कुलायं च । " को० १२६ गाथा । प्रा० ।

**नीणिअ–नीणित**–त्रि० । गते, " निक्कासिअं नीणिअं । " अदन्त्यस्य शब्दः । व्युत्पत्तिपक्षे तु–"णीणिअ" इत्येव णकारोऽऽकारान्तो भविष्यतीति विशेषः । को० १७१ गाथा । स्वस्थानं प्रापिते, आ० १ श्रु० १६ अ० । उत्त० । सूत्र० ।

**नीरंगी–नीरङ्गी**–स्त्री० । शिरोऽवगुण्ठने, " नीरंगी मंसुड्डी । " को० ११६ गाथा । दे० ना० ।



इति

श्रीमत्सौधर्मबृहत्तपागच्छीय-कलिकालसर्वज्ञकल्प-सर्वतन्त्रस्वतन्त्र-

जैनश्वेताम्बराचार्य श्री श्री १००८ भट्टारक-

## श्रीमद्विजयराजेन्द्रसूरीश्वरमहाराज विरचिते

शब्दसङ्कलनात्मके " श्री अभिधानराजेन्द्रकोषे "

चतुर्थो भागः समाप्तः ।